॥ श्रीशिवशङ्कर अथवा यमभय निवारणस्तोत्रम् ॥

अतिभीषणकटुभाषणयमकिङ्किरपटली
कृतताडनपरिपीडनमरणागमसमये ।
उमया सह मम चेतसि यमशासन निवसन्
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ १॥

असदिन्द्रियविषयोदयसुखसात्कृतसुकृतेः
परदूषणपरिमोक्षणकृतपातकविकृतेः ।
शमनाननभवकानननिरतेर्भव शरणं
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ २॥

विषयाभिधबडिशायुधपिशितायितसुखतो
मकरायितमतिसन्ततिकृतसाहसविपदम् ।
परमालय परिपालय परितापितमनिशं
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ ३॥

दयिता मम दुहिता मम जननी मम जनको
मम कल्पितमतिसन्ततिमरुभूमिषु निरतम् ।
गिरिजासुख जनितासुख वसतिं कुरु सुखिनं
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ ४॥

जनिनाशन मृतिमोचन शिवपूजननिरतेः
अभितो दृशमिदमीदृशमहमावह इति हा ।
गजकच्छप जनितश्रम विमलीकुरु सुमतिं
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ ५॥

त्वयि तिष्ठति सकलस्थितिकरुणात्मनि हृदये
वसुमार्गण कृपणेक्षण मनसा शिव विमुखम् ।
अकृताह्निकमसुपोषकमवतात् गिरिसुतया
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ ६॥

पितराविति सुखदाविति शिशुना कृतहृदयौ
शिवया सह भयके हृदि जनितं तव सुकृतम् ।
इति मे शिव हृदयं भव भवतात्तव दयया
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ ७॥

शरणागतभरणाश्रित करुणामृतजलधे

शरणं तव चरणौ शिव मम संसृतिवसतेः ।
परिचिन्मय जगदामयभिषजे नतिरावतात्
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ ८॥

विविधाधिभिरतिभीतिरकृताधिकसुकृतं
शतकोटिषु नरकादिषु हतपातकविवशम् ।
मृड मामव सुकृतीभव शिवया सह कृपया
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ ९॥

कलिनाशन गरलाशन कमलासनविनुत
कमलापतिनयनार्चितकरुणाकृतिचरण ।
करुणाकर मुनिसेवित भवसागरहरण
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ १०॥

विजितेन्द्रिय विबुधार्चित विमलाम्बुजचरण
भवनाशन भयनाशनभजिताङ्गितहृदय ।
फणिभूषण मुनिवेषण मदनान्तक शरणं
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ ११॥

त्रिपुरान्तक त्रिदशेश्वर त्रिगुणात्मक शम्भो
वृषवाहन विषदूषण पतितोद्धर शरणम् ।
कनकासन कनकाम्बर कलिनाशन शरणं
शिवशङ्कर शिवशङ्कर हर मे हर दुरितम् ॥ १२॥

॥ इति श्रीशिवशङ्करस्तोत्रम् ॥